॥ श्रीः ॥

विद्याभवन आयुर्वेद ग्रन्थमाला

३२

श्रीमदग्निवेशेन प्रणीता चरकदृढबलाभ्यां प्रतिसंस्कृता

# चरकसंहिता

## सविमर्श 'विद्योतिनी' हिन्दीव्याख्योपेता

चौखम्बा विद्याभवन, वाराणसी-१

१९६२

# THE CHARAKA SAMHITA

Of

AGNIVEŚA

Revised by Charaka and Dṛdhabala

*With Introduction by*

Vaidya-Samrāta

## SHRI SATYA NARAYANA SHASTRI

PADMABHUSHANA

WITH

*Elaborated Vidyotini Hindi Commentary*

By

**Pt. Kashi Nath Pandeya**
Vice-Principal,
A. D. Ayurvedic College, Varanasi.

**Dr. Gorakh Nath Chaturvedi**
Prof. & Physician, College of
Medical Sciences, B. H. U.



CHOWKHAMBA VIDYA BHAWAN, VARANASI-1

1962

॥ श्रीः ॥

# चरकसंहिता

## सविमर्श 'विद्योतिनी' हिन्दीव्याख्योपेता

*शुभाशंसक :-*

**वैद्यसम्राट् श्री सत्यनारायण शास्त्री 'पद्मभूषण'**

*व्याख्याकार :-*


**पं० काशीनाथ पाण्डेय**

बी० आई० एम० एस०

प्रधान चिकित्सक, शिव-आरोग्य निकेतन तथा

उपप्रधानाचार्य, अर्जुन दर्शनानन्द आयुर्वेदिक

कालेज, वाराणसी

**डा० गोरखनाथ चतुर्वेदी**

बी० ए०, ए० बी० एम० एस०

( ऑनर्स, चरक गोल्डमैडलिस्ट )

एच० पी० ए०-एम० ( जामनगर )

प्राध्यापक तथा चिकित्सक, का० हि० वि० वि०


*सम्पादक-मण्डल :-*


**पं० राजेश्वरदत्त शास्त्री**

आयुर्वेदशास्त्राचार्य, डी० एस-सी० ( आयुर्वेद )

भू० पू० प्रोफेसर तथा अध्यक्ष, आयुर्वेद विभाग एवं प्रधान चिकित्सक, का० हि० वि० वि०

**पं० यदुनन्दन उपाध्याय**

बी० ए०, ए० एम० एस०

प्रोफेसर 'चरक' तथा अध्यक्ष, आयुर्वेद-विभाग

काशी हिन्दू विश्वविद्यालय

**पं० गङ्गासहाय पाण्डेय**

ए० एम० एस०

प्राध्यापक तथा चिकित्सक, आयुर्वेद-विभाग

काशी हिन्दू विश्वविद्यालय

**डा० बनारसीदास गुप्त**

बी० ए०, ए० एम० एस०, साहित्यरत्न

चिकित्सक, केन्द्रीय आयुर्वेदान्वेषण-संस्था, जामनगर

**पं० ब्रह्मशङ्कर मिश्र भिषग्रत्न**

# श्रीपतञ्जलिर्जयति

सर्वतन्त्रापरतन्त्राणाम्, आयुर्वेदशास्त्रावताराणाम्, विश्वविदितयशसाम्, महर्षिकल्पानाम्, प्रथमगणतन्त्र-भारतेश्वराराधितचरणसरसीरुहाणाम्, परमगुरूणाम्, वैद्यसम्राजाम्, काशिकहिन्दूविश्वविद्यालयीयायुर्वेदमहाविद्यालयभूतपूर्वाध्यक्षाणाम्, पद्मभूषणादिराष्ट्रियसम्माननमानितानाम्, वाराणसेयविद्वत्समाजनेतॄणाम्, पूज्यपादानाम्, आचार्यवर्याणाम्,

**श्रीसत्यनारायणशास्त्रिमहाभागानाम्**

## शुभाशंसा

काशी शम्भुनिवासभूमिरनघा गङ्गातरङ्गाप्लुता,
 भङ्गासङ्गमियेष तत्र भगवान् गङ्गाधरश्चैकदा ।
शैवार्धाङ्गनिवारितोऽपि सहसोत्सङ्गाद् द्रुतं निर्गतः,
 कुण्डे शुण्डमथार्पयन् शिशुरयङ्गौरीसुतो वन्द्यते ॥ १ ॥
नादैर्बिन्दुभिरक्षरैश्च रुचिरैर्ब्रह्माण्डपिण्डात्मकैः,
 स्रोतोभिः परिपावयत्यविरतं या पञ्चभिर्भूतलम् ।
विज्ञानस्य समस्तवाङ्मयभृतो ज्ञानस्य चैकाश्रयां,
 वन्दे तां नु परां किलाक्षरमयीं शब्दाख्यवाग्देवताम् ॥ २ ॥
अमुष्मिन् विश्वस्मिन् सकलकलया यो विहरते,
 सतां शुद्धं स्वान्तं रहति न कदाचित्क्षणमपि ।
अये विद्वद्धीराः सदसि भवतां प्राप्तविदुषां,
 नृणां सर्वेषां वः शिव इह शिवाय प्रभवतु ॥ ३ ॥
वाग्दोषानखिलान्न्यरस्यदिह यः स्वीयैर्बलैः शाब्दिकैः,
 कायानां न्यरुणद्धि कश्मलततिं यो वैद्यकीयैर्बलैः ।
योगैश्चापि निराचकार मनसो दोषानशेषांश्च तं,
 विद्वद्गीतयशःपतञ्जलिमुनिं मूर्ध्ना नतेनाश्रये ॥ ४ ॥
महामहिमशालिभिः सकलशास्त्रबोधोद्भवै-
 र्महोभिरखिला बुधा जगति यस्य घूकायिताः ।
दिगन्तविसरत्प्रभं गुरुवरं निजं व्याकृते-
 र्जनैर्नुतपदाम्बुजं शिवकुमार-मिश्रम्भजे ॥ ५ ॥

यदीयशरणङ्गताश्चरणरेणुजुष्टात्मनो,
व्रजन्ति कलधौततां जडजनाश्च लौहोपमाः ।
यदीयवरलेखनी रससुधैकनिष्यन्दिनी,
नमामि नतमस्तको गुरुवरं च गङ्गाधरम् ॥ ६ ॥

समस्तजनताविपन्निकषभूर्यदीयाङ्गुली,
व्यपोहदचिरं रुजो निजदयार्द्रदृष्ट्यैव यः ।
अभूच्च चरकोऽपरो विविधवैद्यविद्यागुरु-
र्नतेन शिरसान्वहं स्वगुरुधर्मदासं भजे ॥ ७ ॥

दीप्यद्ग्रैष्मपतङ्गसन्निभतपस्तेजोभिरुद्यत्प्रभः,
क्षोणीमण्डलमण्डनैकविभवो गोनर्ददेशोद्भवः ।
विद्याम्भोधिनिपीतविज्ञमहसां सन्ध्याजसूर्याञ्जलेः,
स्रस्तस्तत्क्षण एव शेषसुवपुः श्याचार्यवर्यः प्रभुः ॥ ८ ॥

तस्मादेव पतञ्जलिः शुभमतिः शास्त्रत्रयाख्यापकः,
श्रीमत्पाणिनिसूत्रभाष्यमहितं भाष्यं महाद्यं व्यधात् ।
तद्वद् वह्निनिभाकृतेर्विरचिते सूत्रे शुभे चातनोद्,
भाष्यं श्रीचरकाभिधं त्वथ पुनस्सद् योगसूत्रं व्यधात् ॥ ९ ॥

मौख्यं द्योतयितुं त्रिदोषजनितश्यातङ्कजोपक्रम-
स्यास्मात्तद्रहितो न कोऽपि विषयोऽत्रास्ते जगत्यां क्वचित् ।
प्रौढोद्बाहुमहर्षिणापि विहिता शुभ्रा प्रतिज्ञोत्तमा,
सैषः शेषवपुर्जयत्यविरतं यत्तन्त्रजप्रोद्गृतिः ॥१०॥

जगत्प्राणो हव्याशनवृतजगज्जीवनजलं,
त्रयाणामप्येषामितरगुणसत्सत्त्वरजसाम् ।
तमोयोगाच्छश्वद्विलसति जगच्चोभयगुणं,
तथैषां वैगुण्यान्निखिल इह रोगः प्रभवति ॥११॥

अतश्चैतेषां वै जनयति समत्वं खलु यत-
श्चिकित्सा सैवास्ते लिखितमिह पातञ्जलकृतौ ।
क्रियायाः साद्गुण्याज्जगदखिलसौख्यं वितनुते,
ततो धर्मं कृत्स्नं तत इह च नाकं सुखमयम् ॥१२॥

तथा मोक्षश्चास्मिन् विकसति न सन्देहनिलयः,
पुरा प्राणः स्वं वा पर इति समीहा व्ययवा ।
परं नातः क्वापि प्रभवति किलेच्छापि जगति,
यतस्तत्संसिद्धिस्तदिह लिखितं शेषमुनिना ॥१३॥

अथ प्रकृतमनुसरतो मे चरकहिन्दीटीकाभूमिकोल्लेखनक्षणे प्रागनुबन्धचतुष्टये विषयप्रणिगदनावसरे पूर्वमायुर्वेदप्रवचनमावश्यकमिति तदेव वच्मि।

सुविदितमेव नूनं वर्वर्त्ति भिषजां विदुषाञ्च यदपौरुषेयोऽर्थादनादिरयमायुर्वेदस्तादात्म्येनावस्थितो वेद एव, यथा हि प्रागादि—

'सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते, अनादित्वात्स्वभावसंसिद्धलक्षणत्वाद्भावस्वभावनित्यत्वाच्चे'त्यादि। ( च० सू० ३० अ० )

अत्रायमित्युक्त्या भट्टोजिमहोदयोक्तदिशेयं कौमुदीव बुद्धिस्थविषयत्वादर्थादष्टाध्याय्याः कृत्स्नसूत्राणामिवात्रत्यानामपि ज्वलनाकृतेः सूत्राणामुपलब्धिस्थत्वाद् बाढमनादित्वं साधितम्।

तथा—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥

इति महाभाष्यपथेन च प्रणवाद्यारभ्य चतुर्वेदार्थस्मृतीनामपि सत्यपि पौरुषेयत्वेऽनादित्वमुररीकृतमेव तथैव चरकस्याप्यनादित्वं सिद्धमेव। तस्यैव च मुख्यत्वमपि लालसीति, नान्यस्य कस्यचिदपि ग्रन्थस्य शास्त्रत्वं विचकास्ति।

यथाहि—विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोके, तत्र यन्मन्येत महद्यशस्विधीरपुरुषानुमोदितमर्थबहुलमाप्तजनपूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसङ्ग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वविनिश्चयप्रधानं सङ्गतार्थमसङ्कुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च तदभिप्रपद्येत शास्त्रम्, शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्वमित्यादि लक्षणजुष्टत्वाच्चरकस्यैवार्षत्वं शास्त्रत्वञ्चोभयफलकत्वं सर्वथा वरीवर्त्ति।

यथा हि भास्करस्य षोडश शाखाः प्रसमुज्ज्वलन्ति।

यथोक्तम्—

ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः।
विचिन्त्य तेषामर्थञ्चैवायुर्वेदमवीवदत्॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः।
स्वतन्त्रां संहितां तस्माद्भास्करश्च चकार सः॥
भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम्।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च।
व्याधिप्रणाशबीजानि साध्वि! मत्तो निशामय॥

धन्वन्तरिर्दिवोदासः काशिराजोऽश्विनीसुतौ ।
नकुलः सहदेवार्की च्यवनो जनको बुधः ॥
जाबालो जाजलिः पैलः करभोऽगस्त्य एव च ।
एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः ॥
चिकित्सातत्त्वविज्ञानं नामतन्त्रमनौपमम् ।
धन्वन्तरिश्च भगवान् चकार प्रथमं ततः ॥
चिकित्सादर्पणं नाम दिवोदासश्चकार ह ।
चिकित्साकौमुदीं दिव्यां काशिराजश्चकार सः ॥
चिकित्सासारतन्त्रं च भ्रमघ्नश्चाश्विनीसुतौ ।
तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः ॥
चकार सहदेवश्च व्याधिसिन्धुविमर्दनम् ।
ज्ञानार्णवम्महातन्त्रं यमराजश्चकार सः ॥
च्यवनो जीवदानं च चकार भगवानृषिः ।
चकार जनको योगी वैद्यसन्देहभञ्जनम् ॥
सर्वसारं चन्द्रसुतो जाबालस्तन्त्रसारकम् ।
वेदाङ्गसारं तन्त्रं च चकार जाजलिर्मुनिः ॥
पैलो निदानं करभस्तन्त्रं सर्वधरम्परम् ।
द्वैधनिर्णयतन्त्रं च चकार कुम्भसम्भवः ॥
चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश ।
व्याधिप्रणाशबीजानि बलाधानकराणि च ॥
मथित्वा ज्ञानमन्थानैरायुर्वेदपयोनिधिम् ।
ततस्तन्त्राणि चोज्जह्रुर्नवनीतानि कोविदाः ॥
एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम् ।
आयुर्वेदं सर्वबीजं सर्वं जानामि सुन्दरि ! ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
आयुर्वेदस्य विज्ञाता चिकित्सासु यथार्थवित् ।
धर्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः ॥

ब्रह्मवैवर्त्ते १६ अध्याये

तथैवात्रेयस्यापि षट्शाखा आत्रेयीयाग्निवेशादिकास्तास्वाद्यत्वात्समुत्कटवैदुष्यशालित्वान्निखिलदर्शनायतनत्वादामयावधारणप्रौढोपक्रमपाटवदृष्टादृष्टोभयोत्कृष्टफलत्वात्तथाद्याङ्गप्रतिपादनपरिपाट्यैतस्यैव चरकभाष्यस्य सर्वप्रधानत्वं सुतरां सिद्धमेव । यथा हि प्रावोचि जल्पकल्पतरुभाष्यकृता—

एकैकमेकैकमुनिर्यदीयं मतं समाश्रित्य चकार शास्त्रम्।
जयत्यसौ सोऽखिलशास्त्रविद्या-कल्पद्रुमः सर्वफलोदयत्वात्॥

तथा च ब्रह्मेशोष्णरश्मिशतक्रतुभरद्वाजधन्वन्तरिनिर्मितसंहिताततीनां जाज्वल्यमानौजोभिप्रज्वलितसृष्टिसमुदयस्यावेक्षणाद् वाढं दाढर्यमुपैत्येष सिद्धान्तः।

वेदानामायुर्वेदमयत्वमेव, तद्यथा—

## दीर्घायुष्यम्

य० १२। १००
,, ३४। ५०-५२
अ० २। १३। १-५
,, २। २८। १-५
,, ८। १। १-२१
,, ८। २। १-२८
,, १। ३०। १-४
,, १। ३५। १-४
,, ६। ४१। १-३
,, २। ४। १-६
,, ३। ११। १-८
,, २। ६। १-५
,, ६। ११०। १-३
,, ६। ४७। १-३
,, २। २६। १-७
,, ५। ३०। १-१७
,, १६। ६४। १-४
,, १६। ६७। १-७
,, ७। ३२। १
,, ७। ३३। १
,, ७। ५३। १-७
,, ६। ७६। १-४
,, १६। ६३। १
,, १६। ६१। १
,, १६। ७०। १

## ओषधि-वर्णनम्

ऋ० ३। ५७। ३
अथर्व ३। १८। १-६
य० ५। ४२-४३
,, २०। ४५
,, २१। २१
,, २७। २१
,, २८। १०, ३३, ४३
,, २६। १०, ३५
अ० ४। १७। १-८
,, ४। १८। १-८
,, ४। १६। १-८
,, ७। ६५। १-३
,, ६। ५६। १-३
,, ६। ६५। १-३
,, ६। १०६। १-३
,, २। २५। १-५
,, ४। १२। १-७
,, ५। ५। १-६
,, ५। ४। १-१०
,, १६। ३६। १-१०
,, ६। २१। १-३
,, ६। १३६। १-३
,, ६। १३७। १-३
,, ६। १६। १-४

अ० ६ । ३० । १-३
ऋ० १ । ६० । ८
" १० । ८५ । २-४
" १ । ६१ । ६
अ० १ । ३४ । १-५

## रोग-चिकित्सा

अ० ६ । १४ । १-३
" ६ । १०५ । १-३
" १ । २२ । १-४
" २ । ८ । १-५
" ६ । १३८ । १-५
" ७ । ७४ । १-४
" ७ । ७६ । १-६
" ६ । ८३ । १-४
" १ । २३ । १-४
" १ । २४ । १-४
" १ । २५ । १०४
" ७ । ११६ । १-२
" ५ । २२ । १-१४
ऋ० १ । ५० । ११-१३
अ० ४ । १३ । १-७
" १ । १७ । १-४
" ६ । ४४ । १-३
" ६ । ५२ । १-३
" २ । ३ । १-६
" १ । ३ । १-६
ऋ० १ । ६० । ६
" १० । ६ । १-२३
अ० ८ । ७ । १-२८
" ६ । ६६ । १-३
" ४ । ६ । १-१०
" ७ । ३० । १
" ७ । ७६ । १
" १६ । ४५ । १-१०
अ० १६ । ४४ । १-१०
य० ४ । १
" ११ । ४७-४८
" १२ । ७६
" ३५ । ४
" १८ । ३२-३४

## दैवौषधयः

अ० ५ । २६ । १
ऋ० ८ । १८ । ८
य० २८ । ६ ।
अ० ६ । ८३ । १
" ६ । १२४ । १
" १ । २ । १
ऋ० २ । ३३ । १३

## सामुद्रिकौषधम्

अ० ४ । १० । १

## खनिजौषधम्

अ० ४ । ६ । ७
" १ । १६ । २

## प्राणिजौषधम्

अ० ३ । ७ । १

## यक्ष्म (रोग) नाशनम्

ऋ० १० । १६३ । १-६
अ० ३ । ३१ । १-११
" ६ । २० । १-३
" ६ । ८५ । १-३
" ६ । १२७ । १-३
" १ । १२ । १-४
" ३ । ७ । १-७
" ६ । ६१ । १-३
" १६ । ३८ । १-३
" २० । ६६ । ६-१०
" २० । ६६ । १७-२३

अ० १२ । २ । १–५५
„ ६ । ८ । १–२२
„ २ । ३३ । १–७७

## जलचिकित्सा

य० ६ । १०, १३, १०, ३१
„ ६ । १७, २२, २४, २७–२८
„ ८ । २६
अ० ६ । १२४ । १–३
„ ७ । ८६ । १–४
„ १ । ४ । ४
„ १ । ६ । ४
„ ६ । २२ । १–३
„ ६ । २३ । १–३
„ ६ । २४ । १–३
ऋ० ५ । ८३ । १–१०
„ ७ । १०१ । १–६
„ ७ । १०२ । १–१०
„ ७ । १०३ । १–१०
अ० ४ । १५ । १–१६
„ ७ । १८ । १–२
ऋ० ३ । ३३ । १–१३
„ ७ । ५० । ४
„ १० । ७५ । १–६
„ ७ । ६५ । ३
„ ७ । ६६ । ४–६
अ० ७ । ४० । १–२
ऋ० १ । ३ । १०–१२
„ १ । १६४ । ४६
„ २ । ३० । ८
„ २ । ४१ । १६–१८
„ ६ । ६१ । १–१४
अ० ६ । ५७ १–३
ऋ० १ । २३ । १६–२३
„ ७ । ४७ । १–४
ऋ० ७ । ४६ । १–४
„ १० । ६ । १–६
„ १० । १७ । १०–१४
„ १० । १६ । १–८
„ १० । ३० । १–१५
अ० १ । ३३ । १–४
„ ३ । १३ । १–७
„ ७ । ३६ । १
„ १६ । २ । १–१५
„ १६ । ६६ । १–४
य० १ । १२, १३, २१, ३१
„ २ । २, ३४
„ ४ । १–१२
„ ५ । ११
„ १२ । ३५ । ५५
„ १४ । ८
„ २० । १८–२०
अ० १ । ७ । १–३
„ १६ । ६६ । १
„ १६ । ७ । १–

## वाजीकरणम्

अ० ४ । ४ । १–८
„ ६ । ७२ । १-३
„ ६ । १०१ । १–३

## गर्भाधानम्

अ० ५ । २५ । १
„ ६ । ८१ । १–३
„ ६ । १७ । १–४
„ ७ । १११ । १
„ ८ । ६ । १–२६
„ २० । ६६ । ११–१६
ऋ० ५ । ७८ । ५–६
„ ६ । ७४ । ५
अ० १ । ११ । १–६

अ० १६ । ४० । १-४
,, १ । १ । १-४
,, ६ । १०८ । १-५

## मणिधारणम्

अ० ४ । १० । १-७
,, ८ । ५ । १-२२
,, १० । ३ । १-२५
,, १० । ६ । १-३५
,, १६ । २८ । १-१०
,, १६ । २६ । १-६
,, १६ । ३० । १-५
,, १६ । ३१ । १-१४
,, १६ । ३४ । १-१०
,, १६ । ३५ । १-५
,, १६ । ३६ । १-६
,, १६ । ४६ । १-७

## रक्षोघ्नम्

य० ५ । २२
अ० ४ । २० । १-६

## विषनाशनम्

ऋ० १ । १६१ । १-१६
अ० ४ । ६ । १-८
,, ४ । ७ । १-७
,, ६ । १०० । १-३
,, १० । ४ । १-२६
,, ५ । १३ । १-११
,, ७ । ८८ । १
,, ६ । १२ । १-३
,, ६ । ५६ । १-३
,, ७ । ५६ । १-८

## क्रिमिनाशनम्

अ० २ । ३१ । १-५
अ० २ । ३२ । ६
,, १ । ८ । १-४
,, १ । २८ । १-३
,, ४ । २७ । १-१२
,, ५ । २३ । १-१३
,, ५ । २६ । १-१५
,, ६ । ३२ । १-१३

## कृत्यादूषणम्

अ० ५ । १४ । १-१३
,, ५ । ३१ । १-१२
,, १० । १ । १-२२
,, २ । १४ । १-६

## पीडात्रिनाशनम्

अ० ६ । २५ । १-३

## दुःस्वप्ननाशनम्

अ० । १६ । ६ । १-११
,, १६ । ५ । १-१०
,, १६ । ७ । १-१३
,, १६ । ८ । १-२७
,, १६ । ६ । १-४
,, ७ । २३ । १
,, १५ । ५६ । १-६
,, १६ । ५७ । १-५
अथर्व. ४ । ५ । १-७
,, ६ । ६० । १-३
ऋ० १ । १२० । १२
,, २ । २८ । १०
,, १ । १६४ । १-५
अथर्व. ६ । ४५ । १-३
,, ६ । ४६ । १-३
,, ७ । १०० । १
,, ७ । १०१ । १
,, ७ । ६६ । १

| | |
|---|---|
| अ० ६ । ४३ । १-३ | अ० १ । १८ । १-४ |
| „ ५ । १६ । १-११ | „ ६ । १३६ । १-५ |
| „ ५ । १५ । १-११ | „ ६ । १८ । १-३ |
| „ १ । २ । १-४ | „ ७ । ४५ । १-२ |
| „ २ । ७ । १-५ | „ ६ । १११ । १-४ |

अत एव ब्रवीम्यद्यापि दर्शनत्रयं नूत्नमेतस्मात्प्रभवितुमर्हति, यतो हि सूत्रस्थानस्याद्याध्यायादेव वैशेषिकप्रादुर्भावः, अष्टमादिन्द्रियोपक्रमणीयाच्च धर्मशास्त्रस्य, विमानस्याष्टमाच्च गौतमीयन्यायदर्शनप्रभवः, शरीरस्थानप्रथमाध्यायात्साङ्ख्योत्पत्तिः, सिद्धिस्थानाच्च वैदान्तिकाद्वैतादिसमुत्पत्तिः, मध्ये मध्ये च तत्तद्दर्शनानां सूत्ररूपेणोद्धृणितिः । स्थूलात्सूक्ष्मीकरणम्—यथाहि प्राचीनास्तार्किकाः प्राहुः—अथ तत्पूर्वकं त्रिविधमनुमानम्—पूर्ववच्छेषवत्सामान्यतो दृष्टञ्च । अत्र तत्पदेन प्रत्यक्षस्य ग्रहणम्, आत्मेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमित्येतावतानुमित्यास्त्रिविधो भेदः प्रतिपादितः । नव्यास्तु—स्वार्थपरार्थभेदेन भेदद्वयमेव प्रोचुः किन्तूभयोरेकवाक्यता नास्मद्दृष्टौ कुत्रापि समुपेता, तत्र श्रीमता भगवता पतञ्जलिनैवैकवाक्यता प्रागादि—

'प्रत्यक्षपूर्वं त्रिविधं त्रिकालञ्चानुमीयते' इत्यादि ।

तत्रेत्थमवबोध्यम्—यत् तच्चानुमानं त्रैविध्यमापन्नं द्वैविध्यमुपपद्यते, अर्थात् पूर्ववत् शेषवत् सामान्यतो दृष्टं स्वार्थं परार्थं च भवतीति षड्भेदाः संवृत्तास्ते च भूत-भविष्यद्वर्त्तमानभेदेनाष्टादशत्वं यान्ति, ते च पुनः प्रत्यक्षस्यानन्त्यादानन्त्यमुपयान्ति तथानवस्थ्यमपि प्राप्नुवन्ति, यथा हि कैवल्येनाक्ष्णः प्रत्यक्षत्वे यावन्तो भावा दरीदृश्यन्ते लोके, यथा हि कस्मिंश्चिदपि संस्थाने मन्दिरादौ च शतशश्चित्रपटाः पुत्तलिकाद्याश्च विनिर्मिताः वरीवृत्यन्ते, कृत्स्नानामपि तेषां तासां चावबोधे बह्व्यस्तावत्य एवोपलब्धयः प्रादुर्भवन्ति तथा गुणधर्मकर्मणां प्रतिभानं बोभवीति, एवं श्रवग्रहप्रत्यक्षे चानेका विरुदावल्यः पापठ्यन्ते शोश्रूयन्ते च धीर्ध्यानावगमाकृतिप्रतिकृत्यर्थावबोधादयश्च प्रविलसन्ति तथा घ्राणाघ्राणे च बहूनां सुमानामपूर्वापूर्वगन्धानामानन्दोऽवाप्यतेऽथ चैवमेव रसनायामास्वाद्यमानानां षण्णां रसानामेकैकस्यावनिर्मितिभेदेन भक्ष्य-भोज्य-लेह्य-चोष्य-पेयादीनां रस-वीर्य-विपाक-प्रभाव-गुण-धर्माणाञ्चानन्त्याद् बाढमानन्त्यमापद्यते । एवमेव सर्वेषां प्रत्यक्षाणामपि सविकल्पक-निर्विकल्पकौ भेदौ स्वीकृतौ, तयोश्च प्रतीक्षापरीक्षानुभूतिभेदात् त्रिविधो भेदः प्रभिद्यमानः षाड्विध्यमापद्यते, एवमेवास्याप्यानन्त्यमानवस्थ्यञ्च स्यात् तेनानुमित्याः खलु परमानवस्थता संवृत्ता ।

यथाहि अंशांशकल्पनया दोषौषधनिदानादावथ च प्रविभाजने शाब्दिकानामिव फलवैशिष्ट्यप्रतियोगित्वेऽपि—गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः—इत्यादिवज्ज्वरस्त्वेक एव सन्तापलक्षणस्तदभावे विज्वरत्वमेवानुभूयते, किन्तु तस्यैवान्तर्भेदकल्पनायां १३२५५६ मितभेदाः प्रजायन्ते, ततोऽप्यधिका अनवस्था बोभवीति।

वस्तुतस्तु तार्किकाणामिव निमित्तानुमित्यादीनां प्रयोजनफलयोर्नेमान्यथासिद्धत्वं दरीदृश्यतेऽस्माकीनायां त्वनुमित्यां यद्यसद्धेत्वाभासयोरवसरोऽवाप्येत तर्ह्यातङ्किनः सद्मनि परिषदि च महती हाहाकृतिरुत्पद्येत। भिषजश्च शिरसि महत्पातकं निपतेत्।

तत्र दृष्टादृष्टोभयविधप्रचण्डदोषो विलसेदितिदिशैव केनचित् कविना प्रावोचि—

वैद्यस्तर्कविहीनो नृपतिरदाता निरक्षरो मन्त्री।
प्राघुणिकश्चिरवासी मस्तकशूलानि चत्वारि॥ इति।

तत्र वैद्यस्य लक्षणोपादाने वेदे यजुषः सप्तदशाध्याये—

यत्रौषधीः समगमन् राजानः समिताविव विप्रः स उच्यते भिषक् रक्षोहामीव चातनः॥ १॥

यदा वाजयन्नहमोषधीः हस्त आदधे आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा॥ २॥

शेषे चाधुनिकलोलिम्बराजेनागादि—

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु।
गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात्॥

पातञ्जलक्षणे तु—

ततोऽनन्तरमाचार्यं परीक्षेत। तद्यथा पर्यावदातश्रुतं परिदृष्टकर्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहङ्कृतमनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनसमर्थम्—इत्येवंगुणो ह्याचार्यः सुक्षेत्रमार्त्तवो मेघ इव सस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पादयति।

तथा च भिषजां लक्षणादीनि—

ये तु शास्त्रविदो दक्षाः शुचयः कर्मकोविदाः।
जितहस्ता जितात्मानस्तेभ्यो नित्यं कृतं नमः॥

प्राणाभिसराः—

य इमे कुलीनाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्वोपकरणवन्तः सर्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञास्ते प्राणानामभिसरा हन्तारो रोगाणाम्।

शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्।
तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयम्॥
जानीते यः स वै विद्वान् प्राणाभिसर उच्यते।
( च० सू० २९ अ० )

त्रिविधा भिषजः—

भिषक्छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः।
सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजो भुवि॥
वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः।
लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः॥
श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः।
वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः॥
प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः।
जीविताभिसरा ये स्युर्वैद्यत्वं तेष्ववस्थितम्॥
( च० सू० ११ अ० )

श्रुते पर्यवदातत्वं बहुशो दृष्टकर्मता।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम्॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयं कृती।
लघुहस्तः शुचिः शूरः सज्जोपस्कृतभेषजः॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः।
सत्यधर्मपरो यश्च स भिषक्पाद उच्यते॥

अथ च तन्त्रस्य विषयप्रणिगदनप्रवृत्तेस्तन्त्रकर्तुः सत्यामनुक्रमणिकायां सङ्गतौ च विषयो विस्पष्ट एव, तदुच्यमाने कैवल्येन कलेवरसमेधनं सिद्धसाधनमेव सम्भविष्यति, चिकित्सायां यद्वैशिष्ट्यं लालसीति तत्तु निदर्शनमेव, यथा हि 'चरकस्तु चिकित्सिते'।

वस्तुतस्तु यथोचुर्महाभाष्यनिर्मातारः पाणिनीयसूत्रकृते वृद्धिसूत्रस्थे भाष्ये—आचार्यो दर्भपवित्रपाणिः प्राङ्मुख उपविश्य सूत्राणि प्रणयति स्म तत्र वर्णना-

प्यनर्थकेन न भवितव्यं किं पुनरियता सूत्रेण, इतिवत् तदीयोक्तावप्यास्माकीना निश्चितिः, समच्चर्याङ्घ्रिसरसिजरजसां नागेशदीक्षितानां मञ्जूषायां प्रणिगदितिः—आप्तो नामानुभवेन वस्तुतत्त्वस्य कात्स्न्येंन निश्चयवान् रागादिवशादपि नान्यथावादी स्यादित्याह भगवान् चरके पतञ्जलिरिति।

यस्य खलु महात्मनो विद्वद्वरेण्यस्य शेखरादयो ग्रन्थाः साम्प्रतमध्यापकानामध्यापनेऽध्येतृणाञ्चाध्ययने यत्परिमितं काठिन्यमावहन्ति तद्धि विदुषां नागोचरमत एव सुतरां वच्मि यद् भगवदाप्तशब्दयोः प्रयोगो यथा दीक्षितैरकारि तेषामाचार्यचरणानामुद्गृतौ क्व किल वर्णमात्रस्यापि नैरर्थक्यापत्तिः।

सोऽयमायुर्वेद इत्यत्र तच्छब्दस्य पूर्वपरामर्शकृत्कोऽयमिति प्रश्नः समुज्जागर्ति, यतो ह्यायुर्वेदशब्दस्य कण्ठरवेण प्रतिपादितत्वात्तच्छब्दस्य चतुर्विधतद्भेदप्रतिपादनपूर्वकगुरुपारम्पर्यद्योतकत्वम्।

तद्यथा चतुर्विधायुषो लक्षणानि—

तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य विशेषेण यौवनवतः समर्थानुगतबलवीर्ययशःपौरुषपराक्रमस्य ज्ञानविज्ञानेन्द्रियार्थबलसमुदये वर्त्तमानस्य परमर्धिरुचिरविविधोपभोगस्य समृद्धसर्वारम्भस्य यथेष्टविचारिणः सुखमायुरुच्यते, असुखमतो विपर्ययेण।

हितैषिणः पुनर्भूतानां परस्वादुपरतस्य सत्यवादिनः शमपरस्य परीक्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहतमुपसेवमानस्य पूजार्हसम्पूजकस्य ज्ञानविज्ञानोपशमशीलस्य वृद्धोपसेविनः सुनियतरागरोषेर्ष्यामदमानवेगस्य सततं विविधप्रदानपरस्य तपोज्ञानप्रशमनित्यस्याध्यात्मविदस्तत्परस्य लोकमिमं चामुं चावेक्षमाणस्य स्मृतिमतिमतो हितमायुरुच्यते, अहितमतो विपर्ययेण। इति चतुर्विधमायुः।

किन्त्वायुर्लक्षणप्रतिपादनमन्तरा तद्भेदप्रणिगदनमात्माश्रयत्वमुपैतीत्यायुषो लक्षणं प्रागुदीर्यते।

आयुः—पुं० क्ली० जीवितव्याप्यकालः। 'एतीत्यायुः' अर्थात् प्रत्यहं प्रतिक्षणञ्च यद्वायुरुच्छ्वासनिःश्वासरूपेण शरीरेऽभ्युपैति तदेवायुः। यावच्छ्वासा हृदि स्थिता इति न्यायेन शरीरे प्राणवायोः व्यवस्थितिरेवायुः।

यथाहि भगवता पतञ्जलिना चरके प्रागादि—

शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्।<br>
नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते॥

तत्र शीर्यत इति शरीरं 'शॄ' धातोरौणादिकेरन्प्रत्ययेन शरीरमिति सिद्ध्यति तच्चेष्टेन्द्रियार्थाश्रयः शरीरमिति गौतमीयन्यायदर्शनम्।

इन्द्रियम्—इन्दतीन्द्रः इदि परमैश्वर्य्ये धातो रन्प्रत्यये इन्द्रस्तस्माद्घे इयादेशे च 'इन्द्रियम्' इति हृषीकादिपर्यायवत्पदम्।

सत्त्वम्—सतो भावः सत्त्वं गुणो मनश्च।

आत्मा—कर्मपुरुषो जीवो वा;–एतेषां संयोग आयुः। अत्र केवलं शरीरमायुरिति लक्षणे शिलापुत्रस्य शरीरमश्मदारुधात्वादिविनिर्मितपुत्तलिकादौ चातिव्याप्तिः; तदभावे अर्थादिन्द्रियसत्त्वात्मसंयोग इति लक्षणे लिङ्गशरीरे भूतादिविग्रहे चातिव्याप्तिः; इन्द्रियपदाभावे वृक्षादावतिव्याप्तिः; सत्त्वपदाभावे चित्रपटादिविनिर्मितचेष्टावति पुत्तलिकादावतिव्याप्तिः; आत्मपदानुपादाने शरीरेन्द्रियसत्त्वसंयोग इति लक्षणे मृतकशरीरेऽतिव्याप्तिः; आत्मेतिलक्षणे विभौ प्रधानपुरुषे चातिव्याप्तिरसम्भवश्च; इन्द्रियमिति लक्षणेऽसम्भवः; सत्त्वमिति लक्षणे गुणेऽतिव्याप्तिः; धारिमात्रलक्षणेऽधमर्णादावतिव्याप्तिः; धार्यभावे च प्रेतशरीरादावतिव्याप्तिः; जीवितपदानुपादाने मृतकशरीरेऽतिव्याप्तिः; जीवितमितिलक्षणे भूतप्रेतादावतिव्याप्तिः; नित्यग इति लक्षणे क्षणादिकालेऽतिव्याप्तिः; अनुबन्धमात्रोपादाने वर्णसमाम्नाये प्रत्याहारीयान्त्यवर्णेषु सुप्तिङाद्यन्त्यवर्णेषु चातिव्याप्तिः।

वस्तुतस्तु लक्षणमिदं ग्रन्थकर्त्रा भगवता गोबलीवर्दन्यायेन बुद्धिवैशद्यचिकीर्षया चाभाणि, तत्रेत्थं सन्दिह्यते बुद्धिः–सव्यभिचारोऽर्थादव्याप्त्यतिव्याप्तिदोषावनुमित्यामेव भवतस्तर्ह्यत्र कीदृशमनुमानस्वरूपम्? पक्षः आयुः, साध्यम् स्वेतरप्रतियोगित्वावच्छिन्नम्, हेतुः धार्यादिशब्दैः प्रतिपाद्यमानत्वात्, दृष्टान्तोऽग्निवदिति।

तेनेत्थं सिद्धान्तलक्षणं निर्दुष्टं बोभवीति–शरीरेन्द्रियसत्त्वात्मसंयोगविशिष्टत्वे सति धार्यादिपर्यायशब्दैः प्रतिपाद्यमानत्वमायुष्ट्वम्।

वस्तुतस्तु गौतमीयदिशा शरीरात्मसंयोग आयुरित्येव लक्षणं सुवचम्।

अथ तस्यैवायुषो यो हि वेदः स खल्वायुर्वेदः। यथाहि—

तस्यायुषः पुण्यतमो वेदो वेदविदां मतः।

तस्यायुषः इति कथनेन षष्ठीतत्पुरुषो लालसीति, अत्र तच्छब्देन चतुर्विधभेदग्रहणम्, विद् धातोः करणे घञि वेद इति, षष्ठीतत्पुरुषे आयुर्वेद इति। अपरैराचार्यैर्या व्युत्पत्तिः प्रदर्शिता—वेत्ति, विन्दति, विद्यते वाऽनेने-

त्यायुर्वेदः सा न सम्यक्, यतो हि 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनी-राजामुपसर्गेऽपि क्विप्' इति क्विपा वेदविद्धर्मविदितिवदायुर्विदिति स्यान्न-त्वायुर्वेदः।

'वा सरूपोऽस्त्रियामि'त्यनेन विकल्पोऽप्यसम्भव एव सर्वथा क्विपोऽभावात्, तत एव वक्ष्यमाणैवास्माकीनाचार्याणां सरणिः सुष्ठुतरा।

यथाह चक्रपाणिः—विद्धातुश्चेह ज्ञानार्थ एवाभिप्रेतः, यद्वक्ष्यति—अर्थे दशमहामूलीये तथायुर्वेदयतीत्यायुर्वेद इति लाभादयस्त्वर्थाः विदेरिह नोक्ता-स्तेषां साक्षादायुर्वेदाजन्यत्वादिति भावः।

यदि हि श्रीमत्पतञ्जलिभगवदुदीरितेन पथात्रापि व्युत्पाद्येत तर्हि स तु दोषो निरस्येत। शेषाणां त्रयाणामप्यर्थानां यदि वेदपदसिद्धावेव संयोजनं विदध्यात्तर्हि तदीयेन पथैव निर्दोषमापन्नः षष्ठीतत्पुरुषेणाचार्यपथे समुपैष्यति। यथाहि—

वेत्ति रूपं विदज्ञाने विन्ते विदविचारणे।
विद्यते विदसत्तायां लाभे विन्दति विन्दते॥
अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च।

तेनोभयोराचार्ययोरेकवाक्यता संवृत्ता।

**पुण्यतमः**—अत्र पुण्यशब्देनादृष्टफलिकानां प्रायशः श्रुतिभगवतीनामेव ग्रहणं प्रभविष्यति, आयुर्वेदशास्त्रस्य तु दृष्टादृष्टोभयफलजनकतया पुण्य-तमत्वम्, अथ तस्य पारायणेऽपि पुण्यम् इति महाभाष्येणैहलौकिकं शब्दशास्त्रे शब्दसाधुत्वमशुद्धत्वाभावश्चेतिवदत्र स्वस्थस्य स्थास्थ्यरक्षणमातुरस्य रोगप्रशमनं चैहलौकिकम् पारायणजन्यं च पारलौकिकं स्वर्गापवर्गादीत्यु-पलब्ध्या तमप्प्रत्ययः।

**वेदः**—इति करणे घञ्प्रतिपादनेन स्वतन्त्रो वेदशब्दः प्रतिपादितः। तेन तस्यायुषो वेदः 'आयुर्वेदः' इति समासः समीचीनः, वेदविदां मतः इति कथनेनोदाहरणमपि संवृत्तम्। वेदविदामर्थाद्वैद्यानां सम्मतः सिद्धान्त इत्यर्थः, विद्यामधीते वेद वा वैद्यः, एतेन चतुर्दशाष्टदशविद्यानामध्येतृत्वं वैदुष्यञ्च वैद्यस्य द्योतितम्। यन्मनुष्याणामुभयोर्लोकयोर्हितं तद्वक्ष्यते।

तस्य चायुर्वेदस्य चतुर्विधजीवानां कृते समुपयोगो वर्वर्ति, यतो हि पाल-काप्य-शालिहोत्राख्या बह्वो ग्रन्थाः जाज्वल्यमानप्रभावाः राजन्ति तेषु वैशि-ष्ट्येन पुंसामेव कृते उपयोगिता विचकास्ति। यथाहि भगवता प्रतिज्ञातम्—

स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतमित्यादि।

एतेनोद्देशः प्रवृत्तिचतुष्टयं चाध्येतृणां द्योतितम् कृत्स्नै रेवाचार्यैः ते चाचार्याः समर्चितचरणारविन्दाः श्रीमहेश्वरशङ्करब्रह्मेन्द्रभास्करप्रजापत्यश्विनीकुमारादयः वरीवृत्यन्तेऽथ च भगवतः पतञ्जलेश्चरकभाष्यं भट्टारजेज्जटादिटीकाटङ्कितमथ भेलादीनां पञ्चतन्त्राणि काश्यप-धन्वन्तरिप्रभृतीनां च प्रकाण्डपाण्डित्यजुष्टाः प्रचण्डप्रभावाः साम्प्रतमपि समुज्जृम्भमाणाः सर्वेषां शरीरिणामामयानपहरन्तः दरीदृश्यन्ते।

पुरा हि कृते यावन्तः खलु पुरुषा आसन् ते चाखिला एव निरामया निराधयश्चासन् , यथा हि चरके भगवान् पतञ्जलिः।

'प्रागपि चाधर्मादृते नाशुभोत्पत्तिरन्यतोऽभूत्। आदिकाले ह्यदितिसुतसमौजसोऽतिविमलविपुलप्रभावाः··· व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमानरोगनिद्रातन्द्राश्रमक्लमालस्यपरिग्रहाश्च पुरुषा बभूवुरमितायुषः·····कृतयुगस्यादौ'॥ २८॥

'भ्रश्यति तु कृतयुगे केषांचिदत्यादानात्···परिग्रहाल्लोभः प्रादुरासीत्'॥

'ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्···हीयमानगुणपादैराहारविहारैरयथापूर्वमुपष्टभ्यमानान्यग्निमारुतपरीतानि प्राग्व्याधिभिर्ज्वरादिभिराक्रान्तानि···'॥ ३०॥

( च. वि. अ. ३ )

यदा हि त्रेतायामामयानामुत्पत्तिः प्रादुरभूत्तदा महर्षिभिरेका महती सभा हिमवतोऽधित्यकायामाहूता, तत्र परमाप्ता दिव्यदृशो महर्षयः समुपेताः।

तस्यां च कृत्स्नैरेवैकमत्येनेत्थमेव निरणायि, यत् आमयानां विनाशाय सर्ववेदसारभूत आयुर्वेदो धरित्र्यामानेयः प्रचारणीयश्च। तर्हि तस्यानयनाय कस्यान्तिके को नामेतो गच्छेदिति प्रवृत्ते प्रजाभिरक्षणं भूपतेरेवावश्यकं कार्यं तथा देवानां च हविषा परिपोषणं यज्ञैरिति शतक्रतोरेव सर्वथाऽधिकृतमिति सिद्धान्तिते, कः प्रयास्यतीति प्रश्ने जगदुपकारव्रतो महर्षिः भरद्वाज एव प्राक् प्रावोचत्, यदहमेव तस्मिन् कार्ये नियुज्ये, ततो हि शब्दशास्त्रमिव—

ब्रह्मा बृहस्पतये बृहस्पतिरिन्द्राय इन्द्रो भरद्वाजाय इति परिपाट्या तमेव प्रेषयितुं समर्थितवन्तः।

यथा पातञ्जले महाभाष्ये प्रागादि भगवता—बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रं पारायणं चकार न चान्तं जगाम, एतावता कैवल्येना-

युर्वेदस्याश्विनोरेवान्तेवासित्वं विडौजसः सिद्धम् शेषाणां सर्वेषामेव वेदशास्त्राणामध्ययनं बृहस्पतेः सकाशादेवेति सर्वतन्त्रसिद्धान्तः।

ततो हि भगवान् भरद्वाजोऽमरावत्यां धर्मसभायामुपस्थायामरेश्वरं जयाशीर्भिरभिनन्द्य आयुर्वेदजिघृक्षां विनिवेदयामास। सोऽपि परमोत्कस्वान्तेनोपदिदेश, ततश्च कात्स्न्र्येनाधिगम्य यथोक्तमभिगृहीतं चर्षिभ्यो विन्यवेदयत्।

साम्प्रतं को नामायं भरद्वाज इति जिज्ञासायां यथाप्राप्तमुद्गिरामि—

सुमन्तश्चानयो वीरो दुष्यन्ताद् भरतोऽभवत्।
शकुन्तलायान्तु बली यस्य नाम्ना तु भारताः॥

ततो मरुद्भिरानीय पुत्रः स तु बृहस्पतेः।
संक्रामितो भरद्वाजः क्रतुभिर्वितथोऽभवत्॥

( अ. पु. अ. २७८ )

चक्रवर्त्ती सुतो जज्ञे दुष्यन्तस्य महात्मनः।
शकुन्तलायां भरतो यस्य नाम्ना तु भारतः॥

बृहस्पतेरङ्गिरसः पुत्रो विप्रो महामुनिः।
अयाजयद्भरद्वाजो महद्भिः क्रतुभिर्विभुः॥

पूर्वं तु वितथे तस्य कृते वै पुत्रजन्मनि।
ततोऽथ वितथो नाम भरद्वाजात् सुतोऽभवत्॥

ततोऽथ वितथे जाते भरतस्तु दिवं ययौ।
वितथं चाभिषिच्याथ भरद्वाजो वनं ययौ॥

(ब्र. पु. अ. १३ श्लो. ५७-६१ तथा ह. पु. पर्व १, अ. ३२, श्लो. १० तथा १४-१८)

इत्येतेषां पुराणानां प्रामाण्याद् बृहस्पतेरेवाङ्गजो भरद्वाजः, तस्य चाङ्गजो वितथ इति सिद्ध्यति।

भरद्वाजस्याध्ययनाध्यापनकालस्तन्त्रनिर्माणकालश्च क आसीदिति विचारे प्रवृत्ते चत्वारो युगाः शास्त्रप्रणिगदिताः वर्तन्ते, तेषु कृतयुग एव भगवतो भरद्वाजस्याविर्भावोऽथ च पौत्रोत्पत्त्यनन्तरं नाकप्रयाणमवाप्यते। एतन्मध्य एवाध्ययनाध्यापनग्रन्थनिर्माणादिकं चातनोदिति लभ्यते।

तस्यैवायुर्वेदस्य विज्ञानेन भरद्वाजादयः जाबाल्यादयश्च सर्वेपि महर्षयः चिरायुषः संवृत्ताः।

कृतयुगादारभ्य द्वापरान्तं यावत्तस्य ( भरद्वाजस्य ) स्थितिरवाप्यते। तत एव वक्ष्यमाणाब्जजेश्वरक्षणादारभ्याद्यावधि स खल्वायुर्वेद आसीदतस्य-

तिष्यति च ।यावदर्काब्जधरित्रीधराधराब्धिमुखा त्रिलोकी स्थास्यति तावत्स्थितिक्षणमवलोक्यैवाचार्यैरगादि—

यथाम्नायाक्षरसमाम्नाय आयुर्वेदः शाश्वत इत्यथापौरुषेयत्वं च ब्रह्मेशयोः स्मृत्योपदेशकर्तृत्वान्न च निर्माय विश्वसृडप्युपदिदेश—इत्यादिप्रमाणात् ।

विश्वसृज एवाङ्गजोऽत्रिरासीत्तस्यैव च तनुजन्मा पुनर्वसुरात्रेयोऽप्यबीभवत् न चान्तेवास्यासीत्, यथा—

इहात्रिजः सिद्धतमानुवाच द्वात्रिंशतं सिद्धमहर्षिपूज्यः ।
चूर्णप्रदेहान् विविधामयघ्नानारग्वधीये जगतो हितार्थम् ॥

( च० सू० अ० ३।३० )

इत्युद्दिष्टानि मुनिना शारीराण्यत्रिसूनुना ।

( च० सू० अ० ३०।५२ )

भिषग्वरिष्ठं सुरसिद्धजुष्टं मुनीन्द्रमत्र्यात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथावत् प्रकोपरूपप्रशमानपृच्छत् ॥

( च० चि० अ० १२।३ )

ज्ञानप्रशमतपोभिः ख्यातोऽत्रिसुतो जगद्धितेऽभिरतः ।

( च० चि० अ० २२।३ )

भगवन्तमुदारसत्त्वधीश्रुतिविज्ञानसमृद्धमत्रिजम् ।

( च० सि० अ० ११।३ )

प्रशशंस फलेषु निश्चयं परमं चात्रिसुतोऽब्रवीदिदम् ।

( च० सि० अ० ११।१० )

सहस्रे द्वे निजगादात्रिनन्दनः

( वा० शा० ११।१० )

चन्द्रभागीत्युपनाम पातञ्जले चरकभाष्ये दरीदृश्यते । यथा हि—

स्नेहास्नेहविधिः कृत्स्नव्यापत्सिद्धिः सभेषजा ।
यथाप्रश्नं भगवता व्याहृतं चन्द्रभागिना ॥
गान्धारदेशे राजर्षिर्नग्नजित् स्वर्ण(र्ग) मार्गदः ।
सङ्गृह्य पादौ पप्रच्छ चन्द्रभागं पुनर्वसुम् ॥
सुश्रोता नाम मेधावी चन्द्रभागमुवाच ह । ( भेलसंहिता )

शुभ्रात्रेय एव पुनर्वसुरासीन्न तु कृष्णभिक्षूभौ । एतस्यैव महर्षेरग्निवेशादयः षट् शिष्या आसन् निश्शालीनयायावरत्वान्न कश्चिदपि स्थानविशेषोऽस्य तन्त्रे समवाप्यते ।

तस्य यायावरत्वे प्रमाणानीमानि—

वने चैत्ररथे रम्ये समीयुर्विजिहीर्षवः ।

( च० सू० २६।६ )

सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे ।
तप्यमानं तपस्तीव्रम्········ ।

( च० चि० १३।३ )

कैलाशे किन्नराकीर्णे बहुप्रस्रवणौषधे ।

( च० चि० २१।३ )

जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्यराजधान्यां भगवान् पुनर्वसुरात्रेयोऽन्तेवासिगणपरिवृतः पश्चिमे घर्ममासे गङ्गातीरे वनविचारमनुविचरन् शिष्यमग्निवेशमब्रवीत् ।

( च० वि० ३।३ )

विहरन्तं जितात्मानं पञ्चगङ्गे पुनर्वसुम् ।

( च० चि० ४।३ )

ऋषिगणपरिवृतमुत्तरे हिमवतः पार्श्वे विनयादुपेत्य ।

( च० चि० १६।३ )

पुण्ये हिमवतः पार्श्वे सुरसिद्धर्षिसेविते ।

बह्वीषु परिषत्सु संवृत्तजल्पस्य निर्णेतृत्वमप्यवाप्यते—

भगवन्तमुदारसत्त्वधीश्रुतिविज्ञानसमृद्धमत्रिजम् ।
फलवर्त्तिवरत्वनिश्चये सविवादा मुनयोऽभ्युपागमन् ॥
भृगुकौशिककाप्यशौनकाः सपुलस्त्यासितगौतमादयः ॥

( च० सि० ११ अ० )

आत्रेयसंहिता षट्संहितानाम्प्रागेतेनैव भगवता सम्पादिता, सा हि लुप्तप्राया वरीवर्त्ति, हारीतसंहितायां तन्निर्मिताः पञ्चसंहिता आसन् ।

यथा—

चतुर्विंशसहस्रैस्तु मयोक्ता चाद्य संहिता ।
तथा द्वादशसाहस्री द्वितीया संहिता मता ॥
तृतीया षट्सहस्रैस्तु चतुर्थी त्रिभिरेव च ।
पञ्चमी दिक् पञ्चशतैः प्रोक्ताः पञ्चात्र संहिताः ॥

तस्यैवात्रेयपुनर्वसोः षट् शिष्याः समभवन्—

अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥

ते ष्ट चाग्निवेशो ज्वलज्ज्वलनसन्निभो दर्भाग्रोपलब्धिः स्वसतीर्थ्येषु प्राधान्य-मुद्वहन् विशुभ्रकीर्त्तिः समभवत् । तेनैवायुर्वेदसूत्राणि प्रणीतानि यस्योपरि भगवान् पतञ्जलिश्चरकभाष्यं चकार । यदा हि त्रेतायामातङ्कैर्जनाः समतपन् तथा ततो हि ग्लायमाना म्लायमानाश्च समसीदन् तदैवेमे सुमनसः शुचा जगत्परित्राणैकव्रताः स्वस्वसंहिताः प्रणीय प्रचारयन्तः गोपायाञ्चक्रुस्ताश्च संहितास्तत्क्षणादद्यावधि तोतुभ्यमानानामामयान् विनाशयन्ति ।

तस्याग्निवेशतन्त्रस्य भाष्यं चरकाभिधं भगवता निरलेखि ।

शब्दशास्त्रे च पाणिनीयसूत्रकात्यायनवार्त्तिकयोरायुर्वेदस्य ये ये विषयाः समुल्लिखितास्तेषामुपर्यपि भाष्यकृता यानि यानि वाक्यानि समुदीरितानि तेभ्यस्तथा महाराजस्य समुद्रस्य कृष्णचरितामृते या चर्चावचारिता सा पुरस्तादुदीर्यते । यथा—

पतञ्जलिर्मुनिवरो नमस्यो विदुषां सदा ॥
कृतं व्याकरणं येन भाष्यं वचनशोधनम् ।
धर्मावियुक्ताश्चरके योगा रोगहराः कृताः ॥
महानन्दमयं काव्यं योगदर्शनमद्भुतम् ।
योगव्याख्यानभूतं तद्रचितं चित्तदोषहम् ॥

ततोऽपि शेषावतारपतञ्जलेरेवोद्गीतिरास्ते । तच्च भाष्यं यावत्परिशिष्टमासी-त्तद् दृढबलेनापूरितम् । तथाहि—

तच्छङ्करं भूतपतिं सम्प्रसाद्य समापयत् ।
अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे ॥
कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषोञ्छशिलोच्चयम् ।
सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत् ॥
इदमन्यूनशब्दार्थं तन्त्रदोषविवर्जितम् ।
षड्विंशता विचित्राभिर्भूषितं तन्त्रयुक्तिभिः ॥'

तस्य च बह्व्यष्टीकाः बहुभिर्निर्मितास्तद्यथा—

भट्टारजेज्जटगदाधरबाप्यचन्द्र-
श्रीचक्रपाणिबकुलेश्वरसेनभोजैः ।
ईशानकार्त्तिकसुकीरसुधीरवैद्यै-
र्मैत्रेयमाधवमुखैर्लिखितं विचिन्त्य ॥

इत्यादि ।

तासु च चक्रपाणेरधुनापि प्रमिलति । नूनमनया सर्वेषां विदुषां भिषजां छात्राणां च परमोपकृतिः ।

इदानीं हिन्दीटीकाप्रवाहमये जगति प० श्रीकाशीनाथ-गोरक्षनाथाभ्यां लिखितेयं वैद्यानां छात्राणां चोपकर्त्री भविष्यतीत्याशास्ते।

काशीनाथपदाभिधेन भिषजा गोरक्षनाथेन च,
व्याख्या मातृगिरा कृता तु चरके गूढार्थविज्ञापिका।
छात्राणां जटिलस्थलार्थनिखिलस्वान्तप्रसादङ्करी,
भूयाच्छ्रीगिरिजेश्वराङ्घ्रिजलजादभ्यर्थये सन्ततम् ॥

काश्यां श्रीचतुराननेशसविधे सत्स्वर्णदीप्रोल्लसत्-
प्राच्यां धातृदशाश्वमेधविलसद्गोदावरीसङ्गमात्।
मध्ये दक्षिणदिक्षु पुण्यफलदागस्त्याश्रमीयाश्रम
आयुर्वेदचिकित्सको वितनुते श्रीसत्यनारायणः ॥

॥ इति शम् ॥

सत्यनारायणः शा.

# सम्पादकीय

'आयुर्वेद' अत्यन्त प्राचीन शास्त्र है। वस्तुतः प्राचीन आचार्यों ने इसे 'शाश्वत' कहा है और उसके लिए तीन अकाट्य युक्तियाँ दी हैं—'सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते, अनादित्वात्, स्वभावसंसिद्धलक्षणत्वात्, भावस्वभावनित्यत्वात्।' (च. सू. अ. ३० ) अर्थात् आयु और उसका वेद ( ज्ञान ) अनादि होने से आयुर्वेद अनादि है क्योंकि आत्मा के समान सृष्टि भी अनादि है। 'आदिर्नास्त्यात्मनः क्षेत्र-पारम्पर्यमनादिकम्' ( च. शा. अ. १ )। सृष्टि आरम्भ से ही जड़ और चेतन अथवा निरिन्द्रिय और सेन्द्रिय, दो प्रकार की रही है। इन दोनों का ही सम्बन्ध काल या समय से रहता है किन्तु चेतन पदार्थ में जब तक चेतना का अनुबन्ध रहता है उस अवधि को आयु कहते हैं। यथा—

शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्।
नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते॥ ( च. सू. १ )

इस आयु सम्बन्धी प्रत्येक ज्ञेयविषयक ज्ञान ( वेद ) को आयुर्वेद कहते हैं। यथा—

हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।
मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते॥ ( च. सू. १ )

मानव या प्राणिमात्र सृष्टि के आरम्भ से ही अपने हित या अहित का ज्ञान रखता आया है; अपनी आयु की वृद्धि और हानि करने वाली वस्तुओं का ज्ञान भी रखता आया है और उत्तरोत्तर नवीन-नवीन उपायों का अवलम्बन या अनुसन्धान करता आया है। इस प्रकार आयु (जीवन) और वेद (ज्ञान) दोनों सदैव रहे हैं और रहेंगे। अतः आयुर्वेद नित्य है। आयु के ऊपर हित या अहित प्रभाव डालने वाले संसार के जितने भी पदार्थ हैं उनके स्वभाव या गुण सदैव वही रहे हैं जो आज हैं और भविष्य में भी रहेंगे। जैसे अग्नि में दाहकत्व सदैव रहा है, है और रहेगा। उसके घातक प्रभाव से बचने और हितकारक प्रभाव के उपयोग के लिए प्राणी सदैव उद्यत रहा है, है और रहेगा।

इस प्रकार आयुर्वेद की नित्यता प्रमाणित होते हुए भी उसके सिद्धान्तों का सुव्यवस्थित संकलन कर ग्रन्थ रूप में निबद्ध करना बाद में ही प्रारम्भ हुआ। सभी प्राणियों को सब विषयों का अनुभव नहीं होता। समय-समय पर जिन विशिष्ट व्यक्तियों को जिन वस्तुओं का अनुभव हुआ उसके अनुसार बार-बार परीक्षा कर उन्होंने एक सिद्धान्त स्थिर कर लिया। इन्हीं सिद्धान्तों को मन्त्र और सिद्धान्तकर्ता को मन्त्र-

द्रष्टा या ऋषि कहा गया है। इस प्रकार एक के बाद दूसरे सिद्धान्त सामने आने लगे, उनका उपदेश या प्रचार समाज में होने लगा और इन सिद्धान्तों के संकलनात्मक ग्रन्थों का निर्माण होने लगा। इसी आधार पर आयुर्वेद की भी उत्पत्ति मानना अनुचित नहीं है। भगवान् चरक ने भी कहा है 'नह्यायुर्वेदस्याभूत्वोत्पत्तिरुपलभ्यते, अन्यत्रावबोधोपदेशाभ्याम्, एतद्वै द्वयमधिकृत्योत्पत्तिमुपदिशन्त्येके' ( च. सू. ३० )।

पुरातत्त्ववेत्ताओं के अनुसार संसार की प्राचीनतम पुस्तक ऋग्वेद है। विभिन्न विद्वानों ने इसका निर्माणकाल ईसा के ३ हजार से ५० हजार वर्ष पूर्व तक का माना है। इस संहिता में भी आयुर्वेद के अति महत्त्व के सिद्धान्त यत्र-तत्र विकीर्ण हैं। अनेक ऐसे विषयों का उल्लेख है जिनके सम्बन्ध में आज के वैज्ञानिक भी अभीतक सफल नहीं हुए हैं। जैसे यज्ञ के कटे हुए सिर को जोड़ना, विश्पला की कटी टांग के स्थान पर लोहे की टांग लगाना आदि। यजुर्वेद, सामवेद और अथर्ववेद में भी इसी प्रकार आयुर्वेदिक विषयों का उल्लेख मिलता है। अथर्ववेद में शारीर शास्त्र, ओषधि एवं चिकित्सा के विविध अंगों और विधियों का वर्णन प्रचुरता से मिलता है। इसीलिए आयुर्वेद अथर्ववेद का ही उपवेद माना जाता है। वेदों के बाद ब्राह्मण और उपनिषद् ग्रन्थों में भी इनका क्रमशः विकसित और विस्तृत विवेचन मिलता है।

वेदों में अन्य शास्त्रों के साथ अध्यात्म शास्त्र का विवेचन प्रचुरता से है। आयुर्वेदिक विषय उन्हीं में बिखरे पड़े हैं। आयुर्वेद-सम्बन्धी सिद्धान्तों का शृंखलाबद्ध और सुव्यवस्थित संकलन वेदों में न होने से बाद के ऋषियों ने केवल आयुर्वेद-सम्बन्धी विषयों का क्रमबद्ध संकलन कर अनेक संहिताओं का निर्माण प्रारम्भ किया तथा सुविधा की दृष्टि से आयुर्वेद को कायचिकित्सा, शल्यतन्त्र, शालाक्यतन्त्र, कौमारभृत्य, भूतविद्या, विषतन्त्र, रसायन और वाजीकरण इन आठ भागों में विभक्त कर दिया। सम्पूर्ण आयुर्वेद एवं उसके विभिन्न अंगों पर अनेक आचार्यों ने विभिन्न संहिताओं की रचना की। इनकी संख्या सैकड़ों में थी। किन्तु दुर्भाग्य से आज अग्निवेशकृत और चरक तथा दृढबल द्वारा प्रतिसंस्कृत चरकसंहिता और नागार्जुन-प्रतिसंस्कृत सुश्रुतसंहिता ( पूर्ण रूप में ) तथा वृद्धजीवक-प्रतिसंस्कृत काश्यपसंहिता और भेलसंहिता ( खण्डित रूप में ) ही उपलब्ध हैं। हारीतसंहिता नामक एक अन्य संहिता भी उपलब्ध है किन्तु इसकी प्राचीनता के सम्बन्ध में विद्वानों को सन्देह है। सुश्रुतसंहिता शल्यतन्त्रप्रधान और चरकसंहिता कायचिकित्साप्रधान ग्रन्थ हैं। इनकी आज तक की उपलब्धि ही इस बात का स्पष्ट प्रमाण है कि ये अपने-अपने विषय के सर्वोत्तम ग्रन्थ हैं और इसी कारण इनका अत्यधिक प्रचार हुआ। इन दोनों ग्रन्थों पर अनेक टीकाएँ लिखी गयीं। इन्हीं ग्रन्थों के आधार पर संकलित सैकड़ों संग्रहग्रन्थों का निर्माण ईसा के बाद हुआ। इन टीकाओं और संग्रहग्रन्थों में पूर्वोक्त अनेक संहिताओं और उनके रचयिता आचार्यों के नाम उल्लिखित हैं और

उनके उद्धरण भी मिलते हैं। इससे यह प्रतीत होता है कि इनमें से अनेक ग्रन्थ आज से लगभग ५०० वर्ष पूर्व तक भी उपलब्ध थे।

पूर्वोक्त वर्णनों से यह स्पष्ट प्रतीत होता है कि लगभग १००० वर्ष पूर्व तक आयुर्वेद का उत्तरोत्तर विकास होता रहा है किन्तु पारस्परिक कलह, विदेशियों के आक्रमण, साम्प्रदायिक उन्माद आदि अनेक कारणों से भारतीय आयुर्वेद की प्रगति रुक ही नहीं गयी, इसका बहुत ह्रास भी हुआ। एक समय यही समस्त संसार की चिकित्सा-पद्धतियों का जनक था और पूर्वोक्त निरुक्ति के अनुसार आयु ( जीवन ) सम्बन्धी सभी ज्ञान इसके विषय थे। किन्तु आज यह 'प्राचीन भारतीय चिकित्सा-पद्धति' के संकुचित अर्थ में रूढ़ माना जाता है। इतना ही नहीं, अपने समस्त अंगों को खोकर केवल कायचिकित्सा के सीमित क्षेत्र में कबन्धवत् रह गया है। हमें यह कहने में संकोच नहीं होता कि यदि इसकी पूर्ववत् उत्तरोत्तर प्रगति होती रहती तो आज के तथाकथित नवीन और चामत्कारिक आविष्कार आयुर्वेदज्ञों द्वारा होते और ये सभी आयुर्वेद के अपने अंग होते। वस्तुतः अनेक दिशाओं में तो प्राचीन आयुर्वेद की इतनी प्रगति हो चुकी थी कि वहाँ तक आज की अति विकसित पद्धतियाँ अभी तक नहीं पहुँच पायी हैं। किन्तु आयुर्वेद की ही सन्तानें आज विदेशों में विकसित होकर अपने पूर्वज से नाता तोड़कर अपने को पृथक् मानती हैं और आयुर्वेद का उपहास करती हैं। फिर भी हमें यह कहने में संकोच नहीं कि चिकित्सा-विज्ञान के मौलिक सिद्धान्त आज भी वही हैं जिन्हें प्राचीन आचार्यों ने बताया था, उनकी प्रयोगविधि और साधनों में भले ही अन्तर आ गए हैं। हमारा यह कथन उन्मत्त-प्रलाप नहीं है। इस बात के समर्थन में अनेक अर्वाचीन वैज्ञानिकों एवं मनीषियों के वचन भी उद्धृत किए जा सकते हैं और निष्पक्ष भाव से गम्भीर मनन के बाद हर एक व्यक्ति मेरे इस कथन का समर्थन करेगा। किन्तु इसके लिए प्राचीन संहिताओं का अर्वाचीन शास्त्र से तुलनात्मक गम्भीर मनन आवश्यक होगा।

## मूल ग्रन्थ के सम्बन्ध में

जैसा कि पूर्व वर्णन में कहा गया है आज उपलब्ध आयुर्वेदीय संहिताओं में 'चरकसंहिता' सर्वश्रेष्ठ ग्रन्थ है, इसमें चिकित्सा-विज्ञान के मौलिक तत्त्वों का जितना उत्तम विवेचन किया गया है उतना अन्यत्र नहीं है। इसी से प्राचीन विद्वानों ने भी कहा है—'चरकस्तु चिकित्सिते'। इसके अतिरिक्त इस ग्रंथ में सूत्र रूप में सांख्य, योग, न्याय, वैशेषिक, वेदान्त, मीमांसा इन आस्तिक दर्शनों के साथ चार्वाक आदि नास्तिक दर्शनों और परोक्ष रूप से व्याकरणादि वेदाङ्गों का भी संकलन इस सुन्दरता से किया गया है कि केवल इस एक ग्रंथ के विधिवत् अध्ययन से अनेक विषयों से परिचय ही नहीं, उनमें प्रौढि भी प्राप्त की जा सकती

है। इसके एक-एक सूत्र का विवेचन कर अनेक ग्रंथों का निर्माण किया जा सकता है। महर्षिकल्प स्वनामधन्य स्व० कविराज गङ्गाधरजी सेन ने इस ग्रंथ की 'जल्पकल्पतरु' नामक टीका के आरम्भ में इसे अखिलशास्त्रविद्याकल्पद्रुम कहा है—

एकैकमेकैकमुनिर्यदीयं मतं समाश्रित्य चकार शास्त्रम्।
जयत्यसौ सोऽखिलशास्त्रविद्याकल्पद्रुमः सर्वफलोदयत्वात्॥

रचयिता—इस ग्रंथ के प्रत्येक अध्याय के अन्त में पुष्पिका दी गयी है—'इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते···' तथा ग्रन्थ के प्रथम अध्याय में मृत्यु-लोक में आयुर्वेद के अवतरण-क्रम के साथ ग्रन्थ के निर्माता अग्निवेश का नामोल्लेख है। यथा—

ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः॥
अश्विभ्यां भगवाञ्छक्रः प्रतिपेदे ह केवलम्।
ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्॥
.....................................
सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः।
यथावदचिरात् सर्वं बुबुधे तन्मना मुनिः॥
तेनायुरमितं लेभे भरद्वाजः सुखान्वितम्॥
ऋषिभ्योऽनधिकं तच्च शशंसाऽनवशेषयन्।
ऋषयश्च भरद्वाजाजगृहुस्तं प्रजाहितम्॥
.....................................
अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया॥
अग्निवेशश्च भेलश्च जतूकर्णः पराशरः।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः॥
बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः।
तन्त्रप्रणेता प्रथममग्निवेशो यतोऽभवत्॥ (च. सू. अ. १)

अर्थात् ब्रह्मा से प्रजापति ने, प्रजापति से अश्विनीकुमारों ने, उनसे इन्द्र ने और इन्द्र से भरद्वाज ने आयुर्वेद का अध्ययन किया। फिर भरद्वाज ने आयुर्वेद के प्रभाव से दीर्घ, सुखी और आरोग्य जीवन प्राप्त कर अन्य ऋषियों में उसका प्रचार किया। तदनन्तर पुनर्वसु आत्रेय ने अग्निवेश, भेड, जतूकर्ण, पराशर, हारीत और क्षारपाणि नामक छः शिष्यों को आयुर्वेद का उपदेश किया। इन छः शिष्यों में सबमें अधिक बुद्धिमान् अग्निवेश ने सर्वप्रथम एक संहिता का निर्माण किया।

चरकसंहिता के प्रत्येक अध्याय के अन्त में दी गयी पूर्वोक्त पुष्पिका से स्पष्ट है कि इसी अग्निवेशतन्त्र का प्रतिसंस्कार बाद में चरक ने किया और उसका नाम चरकसंहिता पड़ा। उपलब्ध चरकसंहिता में स्पष्ट उल्लेख है कि चिकित्सास्थान के १७ अध्याय तथा १२-१२ अध्याय के कल्पस्थान और सिद्धिस्थान नहीं मिलते थे जिनकी पूर्ति दृढबल ने की। यथा—

अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते॥
तानेतान् कापिलबलिः शेषान् दृढबलोऽकरोत्।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम्॥ ( च. चि. ३० )

इस प्रकार इस संहिता से सम्बद्ध भरद्वाज, आत्रेय, अग्निवेश, चरक और दृढबल इन पांच आचार्यों के नामोल्लेख के अतिरिक्त और कुछ परिचय तथा इनके समय के सम्बन्ध में कोई स्पष्ट उल्लेख न होने से ग्रन्थोक्त अवान्तर विषयों के परीक्षण से ही कुछ निर्णय किया जा सकता है।

भरद्वाज—इन्द्र से आयुर्वेद का अध्ययन कर मनुष्य-लोक में उसका प्रचार करनेवाले सर्वप्रथम व्यक्ति यही हैं। इसी प्रकार व्याकरण शास्त्र के प्रथम ज्ञाता और प्रचारक के रूप में भी इनका वर्णन शाकटायन ने किया है—'यथाचार्या ऊचुः ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय, भरद्वाजो ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायम्।' ब्रह्मा के अयोनिज पुत्र देवर्षि अंगिरा के उतथ्य और बृहस्पति दो पुत्र हुए। उतथ्य की पत्नी ममता के साथ बृहस्पति के संयोग से भरद्वाज की उत्पत्ति कृतयुग के अन्त अथवा त्रेतायुग के आदि में हुई थी। इसका वर्णन मत्स्य, अग्नि, ब्रह्म और हरिवंश पुराणों में एवं श्रीमद्भागवत में विस्तार से मिलता है। उतथ्य के क्षेत्र में, बृहस्पति के बीज से उत्पन्न होने के कारण यह 'द्वाज' हुए और दोनों माता को ही भरण ( पोषण ) का 'मूढे भर द्वाजमिमम्' आदेश देकर इन्हें त्याग कर चले गए अतः इन्हें 'भरद्वाज' कहा गया। ज्वरादि रोगों की उत्पत्ति त्रेतायुग के मध्य में हुई ऐसा वर्णन चरकसंहिता के जनपदोद्ध्वंसनीय विमान में है, और रोगों की उत्पत्ति होने के बाद ही ऋषियों की सभा हुई जिसमें भरद्वाज को इन्द्र के पास आयुर्वेद का अध्ययन करने के लिए भेजा गया ( च. चि. १ तथा सू. १ )।

इनका आश्रम प्रयाग में था ( मर्यादापुरुषोत्तम भगवान् राम भी यहाँ पधारे थे और यह आश्रम अब भी प्रयाग में भक्त यात्रियों का प्रिय स्थल है )। तपोबल और रसायन विशेषतः आचार-रसायन और दिव्यौषधियों के प्रभाव से ऋषिगण दीर्घजीवी होते थे।

'ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुवुः ।'
'एतद्रसायनं पूर्वं वसिष्ठः कश्यपोऽङ्गिराः ।
जमदग्निर्भरद्वाजो भृगुर्वान्यस्यश्च तद्विधाः ॥
प्रयुज्य प्रयता मुक्ता श्रमव्याधिजराभयात् ।
यावदैच्छंस्तपस्तेपुस्तत्प्रभावान्महाबलाः ॥' ( च. चि. १ )

इनमें भी भरद्वाज सबसे अधिक दीर्घायु हुए। इसका उल्लेख ऐतरेय आरण्यक में भी आया है—'भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवितमस्तपस्वितम आस ।' यह पाञ्चाल देश के राजा पृषत् के मित्र और कौरव-पाण्डवों के गुरु द्रोणाचार्य के पिता थे। पृषत् की मृत्यु के बाद उनके पुत्र द्रुपद के राजा होने पर भरद्वाज भी दिवङ्गत हुए।

ततो व्यतीते पृषते स राजा द्रुपदोऽभवत् ।
पाञ्चालेषु महाबाहुरुत्तरेषु नरेश्वरः ॥
भरद्वाजोऽपि भगवानारुरोह दिवं तदा ॥ (महाभारत, आदिपर्व अ. १३)

द्रोणाचार्य द्रुपद के मित्र थे। बाद में मनोमालिन्य हो गया था। द्रुपद की पुत्री द्रौपदी पांडवों की पत्नी थी। महाभारत-युद्ध में द्रुपद और द्रोण दोनों की मृत्यु हुई। यह सब प्रसङ्ग महाभारत में वर्णित है। इस प्रकार कृतयुग से द्वापर के अन्त के कुछ पूर्व तक भरद्वाज का होना प्रमाणित है।

इन्द्र से आयुर्वेद का अध्ययन कर मनुष्य-लोक में आयुर्वेद का उपदेश करनेवाले सर्वप्रथम व्यक्ति भरद्वाज थे। अग्निवेश के गुरु महर्षि आत्रेय ने भी आयुर्वेद-अध्ययन इन्हीं से किया। ये गोत्र-प्रवर्तक ऋषि हुए। इनके अनेक वंशज भी आयुर्वेद के ज्ञाता हुए। चरकसंहिता के सूत्रस्थान अ. १२ में कुमारशिरा भरद्वाज तथा २५वें और शारीर स्थान के तीसरे अध्याय में एक भरद्वाज का भी उल्लेख आया है। आत्रेय ने इनके मतों का खण्डन और शंकाओं का समाधान किया है। अतः यह भरद्वाज आत्रेय के गुरु भरद्वाज से सर्वथा भिन्न थे, इसमें सन्देह नहीं। १६५६ ई० में प्रस्तुत कवीन्द्र-सूची में एक भरद्वाजसंहिता का उल्लेख है किन्तु वह उपलब्ध नहीं है। अतः यह कहना कठिन है कि यह ग्रन्थ प्रथम भरद्वाज का था या किसी अन्य की रचना था।

आत्रेय—यह ब्रह्मा के अयोनिज ( मानस ) पुत्र देवर्षि अत्रि के पुत्र थे। आत्रेय शब्द से अत्रि-पुत्र, अत्रि-वंशज एवं अत्रि-शिष्य-परम्परा का भी बोध होता है। किन्तु यहाँ आत्रेय शब्द पुत्रवाचक ही है। चरकसंहिता में विभिन्न स्थलों पर इनके लिए 'अत्रिज' 'अत्रिसूनु' 'अत्र्यात्मज' 'अत्रिसुत' 'अत्रिनन्दन' आदि का स्पष्ट उल्लेख है। अत्रि ऋषि स्वयं भी आयुर्वेद के आचार्य थे, जैसा कि काश्यपसंहिता के इस वाक्य से स्पष्ट है—'इन्द्र ऋषिभ्यश्चतुर्भ्यः कश्यपवशिष्ठात्रिभृगुभ्यस्ते पुत्रेभ्यः शिष्येभ्यश्च प्रददुः।'

महाकवि अश्वघोष ने भी लिखा है—'चिकित्सितं यच्च चकार नात्रिः पश्चात्तदात्रेय ऋषिर्जगाद।' चरकसंहिता के मूल ग्रन्थ 'अग्निवेशतन्त्र' के रचयिता अग्निवेश एवं उनके सहपाठी भेड आदि के यह गुरु थे। इनका विशिष्ट नाम पुनर्वसु (सम्भवतः पुनर्वसु नक्षत्र में जन्म होने से) एवं चन्द्रभाग या चन्द्रभागी भी था। कुछ लोग इनकी माता का नाम चन्द्रभागा और इनका चान्द्रभाग या चान्द्रभागी मानते हैं तो कुछ लोग हिमालय के चन्द्रभाग शिखर अथवा चन्द्रभागा नदी के समीप इनका जन्म होने से यह नाम मानते हैं। चरकसंहिता में भिक्षु आत्रेय और कृष्णात्रेय नाम भी आए हैं। एक ही प्रसंग में आत्रेय और भिक्षु आत्रेय नामों के होने से यह दोनों निश्चय ही भिन्न व्यक्ति हैं। परन्तु कृष्णात्रेय के साथ ही आत्रेय नाम किसी स्थल पर न होने से यह दोनों एक ही थे ऐसा सन्देह होता है। इस सम्बन्ध में श्री गुरुपद हालदार महोदय का मत है कि श्रीमद्भागवत के चतुर्थ स्कन्ध में लिखा है—

> अत्रेः पत्न्यनसूया त्रीञ्जज्ञे सुयशसः सुतान्।
> दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्॥

इससे सोम से चन्द्र या चन्द्रभाग या पुनर्वसु आत्रेय तथा कृष्णात्रेय से दुर्वासा का ग्रहण करना चाहिए। इस मत के अनुसार दत्तात्रेय से भिक्षु आत्रेय का भी ग्रहण कर सकते हैं। किन्तु चरकसंहिता सूत्रस्थान के 'त्रित्वेनाष्टौ समुद्दिष्टाः कृष्णात्रेयेण धीमता' इस लेख से प्रतीत होता है कि वस्तुतः कृष्णयजुर्वेदी होने से पुनर्वसु को कृष्णात्रेय भी कहा जाता था। ये तीनों आयुर्वेद के भी आचार्य थे। अपने पिता अत्रि ऋषि तथा महर्षि भरद्वाज से भी आयुर्वेद का ज्ञान प्राप्त कर तथा उसमें प्रौढि प्राप्त कर पुनर्वसु आत्रेय अपने समय के सर्वश्रेष्ठ वैद्य हुए। इन्द्र के पास भरद्वाज के जाने से पूर्व रोगों के निवारणार्थ विचार के लिए जो ऋषि-सम्मेलन हुआ था उसमें भी यह एक विशिष्ट व्यक्ति थे अतः इन्हें भरद्वाज का समसामयिक अथवा कुछ अवरज मानने में आपत्ति नहीं है।

कुछ विचारक एक तिब्बतीय उपकथा में जीवक का तक्षशिला में आत्रेय के पास आयुर्वेदाध्ययन का उल्लेख देखकर आत्रेय को बौद्धकालीन मानते हैं पर यह मत निम्नलिखित कारणों से माननीय नहीं है—

१. तिब्बतीय कथा के अतिरिक्त सिंहल, ब्रह्मदेश आदि की उपकथाओं में भी जीवक के तक्षशिला में अध्ययन का उल्लेख है पर उनमें उनके गुरु का नाम न देकर एक दिशाप्रमुख आचार्य से शिक्षा प्राप्त करने मात्र का उल्लेख है। एक सिंहलीय उपकथा में तो जीवक के गुरु का कपिलक्ष्य (कपिलाक्ष) तथा क्यांगूर विनय में व्युन्-शेकि-भु (नित्यप्रज्ञ) नाम भी मिलता है।

२. अग्निवेश के गुरु आत्रेय कायचिकित्सा के पण्डित थे। शल्यतन्त्रसम्बन्धी विषयों को उन्होंने पराधिकार की वस्तु माना है। किन्तु जीवक की प्रसिद्धि

शल्यतन्त्र में है और शल्यतन्त्र के ही विशेष अध्ययन के लिए तक्षशिला जाने का उल्लेख भी है।

३. तक्षशिला का उल्लेख पाणिनि ने भी किया है इससे प्रतीत होता है कि पाणिनि के पूर्व ही तक्षशिला विद्या का एक केन्द्र प्रसिद्ध हो चुका था। किन्तु चरक-संहिता में चैत्ररथ वन, कैलास, हिमवत्पार्श्व आदि के अतिरिक्त विशेष रूप से 'जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्यराजधान्याम्' (च. वि. ३) में पञ्चाल और काम्पिल्य का उल्लेख है किन्तु तक्षशिला का नहीं। पञ्चाल और काम्पिल्य का उल्लेख वेदों में भी है। अतः स्पष्ट है कि तक्षशिला को महत्त्व प्राप्त होने के पूर्व ही आत्रेय का काल मानना उचित है।

४. आत्रेय के वचनों में सर्वत्र ही वैदिकता की छाप है, बौद्धमत की छाया भी नहीं है।

५. आत्रेय के समकालीन आचार्यों का महाभारत के पूर्ववर्ती होना अन्य प्रमाणों द्वारा प्रमाणित होने से इनका भी काल वही होना चाहिए।

६. यदि जीवक के गुरु और तक्षशिला के आचार्य रूप में आत्रेय की सत्ता मानी भी जाय तो यह आवश्यक नहीं कि अग्निवेश और जीवक दोनों के गुरु आत्रेय एक ही थे।

७. पुनर्वसु आत्रेय यायावर ऋषि थे अर्थात् इनका कोई नियत आश्रम नहीं था। ये पर्यटन करते हुए आयुर्वेद का उपदेश करते थे। विद्वानों की विभिन्न गोष्ठियों में विविध शंकाओं का समाधान करते थे। इनकी उक्तियाँ युक्तियुक्त और सर्वमान्य होती थीं। इनका तक्षशिला और जीवक से कोई भी सम्बन्ध चरक में उल्लिखित नहीं है।

आजकल प्रकाशित 'हारीतसंहिता' में आत्रेयनिर्मित क्रमशः २४ हजार, १२ हजार, ६ हजार, ३ हजार और १५ सौ श्लोकों में लिखी ५ संहिताओं का उल्लेख मिलता है और उनकी प्रशंसा में निम्नलिखित श्लोक है :—

यथा सिंहो मृगेन्द्राणां यथाऽनन्तो भुजङ्गमे।
वेदानाञ्च यथा शम्भुस्तथात्रेयोऽस्ति वैद्यके॥

अग्निवेश—इन्होंने महर्षि आत्रेय से आयुर्वेद का अध्ययन कर 'अग्निवेश-तन्त्र' नामक ग्रन्थ का निर्माण किया जिसका प्रतिसंस्कार चरक ने किया। शालिहोत्र और पालकाप्य संहिताओं में भी इनका उल्लेख है। पाणिनि के गर्गादिगण में जतूकर्ण, पराशर आदि सतीर्थ्यों के साथ अग्निवेश का भी नाम है अतः यह पाणिनि से पूर्ववर्ती थे। शतपथब्राह्मण में इनके वंशजों का उल्लेख होने से यह उसके भी पूर्ववर्ती थे, यह प्रमाणित होता है। महाभारत के लेखानुसार यह वेद-वेदाङ्ग में भरद्वाज के शिष्य और शस्त्रविद्या में द्रोणाचार्य के गुरु थे। इस प्रकार महाभारत युद्ध के बहुत पहिले इनकी सत्ता प्रमाणित होती है। अग्निवेश-प्रणीत 'अंजननिदान' नामक

एक संक्षिप्त निदानग्रन्थ भी मिलता है। पर यह अग्निवेश तन्त्रकार की ही रचना है इसमें सन्देह है।

चरक—कुछ लोग अग्निवेश और चरक को एक ही मानते हैं पर चरकसंहिता के प्रत्येक अध्याय के अन्त में 'अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते' इस पुष्पिका से ही स्पष्ट है कि अग्निवेश और चरक भिन्न व्यक्ति थे। किन्तु ये चरक कौन थे, इनका काल क्या था और ये किस प्रदेश के थे यह स्पष्ट नहीं है। इस सम्बन्ध में विचार करते हुए विभिन्न पुरातत्त्वविदों ने अनेक मत उपस्थित किए हैं, जिनमें निम्नलिखित पाँच विशेष महत्त्व रखते हैं।

१. चरक कुषाणवंशीय राजा कनिष्क के राजवैद्य थे।

२. पातञ्जल योगसूत्र और पाणिनीय महाभाष्यकार पतञ्जलि और चरक एक ही थे।

३. भावप्रकाश में वर्णित क्रम के अनुसार यह 'विशुद्ध' नामक एक ऋषि के पुत्र और भगवान् अनन्त के अवतार थे।

४. इनका नाम कपिष्ठल चरक था। इनका निवासस्थान पञ्चनद (पंजाब) प्रदेश में इरावती और चन्द्रभागा नदियों के बीच स्थित कपिस्थल नामक ग्राम में था। यह गोत्रप्रवर्तक ऋषि थे।

५. कृष्ण यजुर्वेद के टीका(चरकशाखा)कार वैशम्पायन-शिष्य चरक ही अग्निवेशतन्त्र के प्रतिसंस्कर्ता थे।

१. बौद्ध त्रिपिटक ग्रन्थ (चीनी भाषा में हुए अनुवाद) में चरक को कुषाण-वंशीय राजा कनिष्क का राजवैद्य लिखा देखकर पाश्चात्त्य विचारक 'सिल्व्याँ लेवि' तथा उन्हीं के अनुसार अन्य अनेक विचारकों ने भी चरक का काल प्रथम अथवा द्वितीय ईशवीय शताब्दी माना है। एक महाशय ने—जो कि ब्राह्मणनिन्दा और प्रत्येक सत्कार्य का श्रेय अब्राह्मणों और बौद्धों को ही देने का ठीका-सा लिए हैं—इसी आधार पर महर्षि चरक और कवि अश्वघोष में अभेद सिद्ध करने का उपहासास्पद खरनाद किया है। किन्तु यह मत नितान्त अनादरणीय है क्योंकि पूर्वोक्त त्रिपिटक ग्रन्थ के अतिरिक्त अन्यत्र कहीं भी इसका उल्लेख नहीं है। कनिष्क का राजवैद्य होने पर तत्कालीन शिलालेखों में कहीं न कहीं चरक का उल्लेख होता। कनिष्क के समकालीन आर्य नागार्जुन ने अपने उपायहृदय नामक ग्रन्थ में सुश्रुत का स्मरण किया है किन्तु अपने समसामयिक, अत्यन्त प्रतिष्ठित राजवैद्य चरक को वे भूल जायँ यह अस्वाभाविक है। राजतरङ्गिणीकार ने भी कनिष्कवृत्तवर्णन में अवश्य चरक का उल्लेख किया होता। कनिष्क बौद्ध था, उसके सभासद भी प्रायः बौद्ध थे, पर चरक के ग्रन्थ में कहीं बौद्धत्व की छाया भी नहीं है। चरक और पतञ्जलि एक ही थे ऐसी जनश्रुति है और पतञ्जलि का काल ईसापूर्व दूसरी या तीसरी शताब्दी

